१०

न स्त्रीणामप्रियः कश्चित्प्रियो वापि न विद्यते ।
गावस्तृणमिवारण्ये प्रार्थयन्ति नवं नवम् ॥

११

यस्य स्त्री तस्य भोगेच्छा निस्स्त्रीकस्य क्व भोगभूः ।
स्त्रियं त्यक्त्वा जगत्त्यक्तं जगत्त्यक्त्वा सुखी भवेत् ॥

१२

नयनविभ्रमैरन्यं वचनैरन्यं विचेष्टितैरन्यम् ।
रमयति सुरतेनान्यं स्त्री बहुरूपा गिरा अन्यम् ।

१३

स्त्रियो हि मूलं निधनस्य पुंसः ।
स्त्रियो हि मूलं व्यसनस्य पुंसः ॥
स्त्रियो हि मूलं नरकस्य पुंसः ।
स्त्रियो हि मूलं कलहस्य पुंसः ॥

१४

संमोहयन्ति मदयन्ति विडम्बयन्ति ।
निर्भर्त्सयन्ति रमयन्ति विषादयन्ति ॥
एताः प्रविश्य सदयं हृदयं नराणां ।
किं नाम वामनयना न समाचरन्ति ॥

१५

भर्त्ता यद्यपि नीतिशास्त्रनिपुणो विद्वान्कुलीनो युवा।
दाता कर्णसमः प्रसिद्धविभव· शृङ्गारदीक्षागुरु ॥
स्वप्राणाधिककल्पिता स्ववनिता स्नेहेन संतापिता।
त कान्तं प्रविहाय सैव युवती जार पतिं वाञ्छति ॥

१६

आःपाकं न करोपि पापिनि कथ पापी त्वदीय पिता।
रण्डे जल्पसि किं तवैव जननी रण्डा त्वदीया स्वसा॥
निर्गच्छ त्वरित गृहात् बहिरितो नेद त्वदीय गृहम्।
हा हा! नाथ ममाद्य देहि मरणं जारस्य भाग्योदय ॥

१७

नून हि ते कविवग विपरीतबोधा. ।
ये नित्यमाहुरबला इति कामिनीस्ताः ॥
याभिर्विलोलतरतारक–दृष्टिपातै ।
शक्रादयोऽपि विजितास्त्वबलाः कथ ता ॥

१८

ललाटे कस्तूरीं तिलकमबला कज्जलरुचिं ।
दृशो कर्णद्वद्वे विमलमणि–ताटङ्कयुगलम् ॥

२४

ान दुर्जनसंसर्गं, पत्या च विरहोऽटनम् ।
वप्नमन्यगृहे वासो, नारीणां दूषणानि षट् ॥

२५

निर्भूमिर्विषकदली गतदरी व्याघ्री निराव्हो महा ।
व्याधिर्मृत्युरकारणश्च ललना नष्टाभ्रवज्राशनिः ॥
बन्धुस्नेह–विघात–साहस–मृषावादादिसंतापभू ।
प्रत्यक्षापि च राक्षसीति विरुदैः ख्यातागमे त्यज्यताम् ॥

२६

चर्मास्थिमज्जान्त्रवसास्रमांस–
मेध्याद्यशुच्यस्थिरपुद्गलानाम् ॥
स्त्रीदेहपिंडाकृतिसंस्थितेषु ।
स्कंधेषु किं पश्यसि रम्यमात्मन् ॥

२७

सद्यो बुद्धिहरा तुंडी, सद्य प्रज्ञाकरी वचा ।
सद्यः शक्तिहरा नारी, सद्य शक्तिकर पय ॥

१२

लोकेषु निर्धनो दुःखी, ऋणग्रस्तस्ततोऽधिकम् ।
ताभ्यां रोगयुतो दुःखी, तेभ्यो दुःखी कुभार्यकः ॥

३३

यस्य भार्या विरूपाक्षी, परमन्दिरकाङ्क्षिणी ।
कुलक्षणा कुशीला च, दूरतः परिवर्जयेत् ॥

३४

अत्यासन्ना विनाशाय, दूरस्था न फलप्रदा ।
सेव्यन्तां मध्यभावेन, राजा वह्निर्गुरुः स्त्रियः ॥

३५

अग्निरापः स्त्रियो मूर्खः, सर्पो राजकुलानि च ।
नित्यं यत्नेन सेव्यानि, सद्यः प्राणहराणि षट् ॥

३६

विलीयते घृतं यद्वदग्नेः संसर्गतस्तथा ।
नारीसंसर्गतः पुंसो, धैर्यं नश्यति सर्वथा ॥

३७

स्त्रियो हि निन्द्यतां लोके, स्त्रियः प्रीतिविनाशिकाः ।
पापबीजं कलेर्मूलं, धर्मस्य नाशिकाः स्त्रियः ॥

# स्वभाव-वर्णनम् ।

१

यः स्वभावो हि यस्यास्ति, स नित्यं दुरतिक्रमः ।
श्वा यदि क्रियते राजा, तत्किं नाश्नात्युपानहम् ॥

२

न धर्मशास्त्रं पठतीति कारणं,
न चापि वेदाध्ययनं दुरात्मनः ।
स्वभाव एवात्र तथातिरिच्यते,
यथा प्रकृत्या मधुरं गवां पयः ॥

३

काकः पद्मवने रतिं न कुरुते हंसो न कूपोदके ।
मूर्खः पण्डितसङ्गमे न रमते दासो न सिंहासने ॥
कुस्त्री सज्जनसङ्गमे न रमते नीच जनं सेवते ।
या यस्य प्रकृतिः स्वभावजनिता केनापि न त्यज्यते ॥

४

पिण्डे पिण्डे मतिर्भिन्ना, कुण्डे कुण्डे नव पय. ।
जातौ जातौ नवाचारा, नवा वाणी मुखे मुखे ॥

दीपे प्रज्वलिते विनश्यति तम किं दीपमात्रं तमः।
तेजो यस्य विराजते स बलवान् स्थूलेषु क प्रत्यय. ॥

३

यत्रास्ति लक्ष्मीर्विनयो न तत्र।
अभ्यागतो यत्र न तत्र लक्ष्मी' ॥
उभौ च तौ यत्र न तत्र विद्या।
नैकत्र सर्वो गुणसन्निपात' ॥

४

कोदारेण विदारिता वसुमती पश्चात्खरारोहणम्।
तत्पापिष्टकुलालपादहनन दण्डेन चक्रभ्रम ॥
रज्वा छेदन–ताप–ताडनमथो ह्येतद्विषोढ मया।
कामिन्या. करटकर्णं बहुकृत ह्येतद्धि दु ख महत् ॥

५

स्थानमुत्सृज्य गच्छन्ति, सिंहा. सत्पुरुषा गजा।
तत्रैव निधन यान्ति, काकाः कापुरुषा मृगा ॥

६

नाभिषेको न संस्कार, सिंहस्य क्रियते मृगै।
विक्रमार्जितराज्यस्य, स्वयमेव मृगेन्द्रता ॥

७

आपदि मित्रपरीक्षा शूरपरीक्षा रणाङ्गणे भवति ।
विनये वंशपरीक्षा स्त्रियः परीक्षा तु निर्धने पुंसि ॥

८

निन्दन्तु नीतिनिपुणा यदि वा स्तुवन्तु,
लक्ष्मीः समाविशतु गच्छतु वा यथेष्टम् ।
अद्यैव वा मरणमस्तु युगान्तरे वा
न्याय्यात्पथः प्रविचलन्ति पदं न धीराः ॥

९

चलन्ति गिरयः कामं युगान्तपवनाहताः ।
कृच्छ्रेऽपि न चलत्येव धीराणां निश्चलं मनः ॥

१०

विदारयति यत्कर्म तपसा च विराजते ।
तपो वीर्येण युक्तश्च तस्माद्वीर इति स्मृतः ॥



# गुणः ।

१

गुणाः कुर्वन्ति दूतत्व, दूरेऽपि वसतां सताम् ।
केतकीगन्धमाघ्राय, स्वय गच्छन्ति षट्पदाः ॥

२

यदि सन्ति गुणाः पुंसां, विकसन्त्येव ते स्वयम् ।
न हि कस्तूरिकामोदः, शपथेन प्रतीयते ॥

३

गुणवज्जनसंसर्गाद्याति, स्वल्पोऽपि गौरवम् ।
पुष्पमालाप्रसङ्गेन, सूत्र शिरसि धार्यते ॥

४

शरीरस्य गुणानाञ्च, दूरमत्यन्तमन्तरम् ।
शरीर क्षणविध्वंसि, कल्पान्त—स्थायिनो गुणाः ॥

५

गुणैर्गौरवमायाति, नोच्चैरासनमास्थितः ।
प्रासादशिखरस्थोऽपि, काकः किं गरुडायते ॥

६

गुणिनोऽपि हि सीदन्ति, गुणग्राही न चेदिह ।
सगुणः पूर्ण-कुम्भोऽपि कूप एव निमज्जति ॥

७

गुणाः सर्वत्र पूज्यन्ते पितृवंशो निरर्थकः ।
वासुदेवं नमस्यन्ति वसुदेवं न मानवाः ॥

८

गुणानर्घन्ति जन्तूनां न जातिं केवलां क्वचित् ।
स्फाटिकं भाजनं भग्नं काकिण्याऽपि न गृह्यते ॥

९

अगुणी गुणिनं वेत्ति गुणी गुणिषु मत्सरी ।
गुणी च गुणरागी च विरलः सरलो जनः ॥

१०

परैः प्रोक्ता गुणा यस्य निर्गुणोऽपि गुणी भवेत् ।
इन्द्रोऽपि लघुतां याति स्वयं प्रख्यापितैर्गुणैः ॥

११

गुणी गुणं वेत्ति न वेत्ति निर्गुणो,
बली बलं वेत्ति न वेत्ति निर्बलः ।

मधोर्गुणं वेत्ति पिको न वायसः,
करी च सिंहस्य बलं न मूषकः ॥

१२

बालादपि ग्रहीतव्यं, युक्तमुक्तं मनीषिभिः ।
रवेरविषये किं न, प्रदीपस्य प्रकाशनम् ॥

१३

युक्तियुक्तमुपादेयं, वचनं बालकादपि ।
विदुषाऽपि सदा ग्राह्यं, वृद्धादपि न दुर्वचः ॥

१४

अणुभ्यश्च बृहद्भ्यश्च, शास्त्रेभ्यः कुशलो नरः ।
सर्वतः सारमादद्यात्, पुष्पेभ्य इव षट्पदः ॥

१५

गुणैः स्थानच्युतस्याऽपि, जायते महिमा महान् ।
अपि भ्रष्टं तरोः पुष्पं, जनैः शिरसि धार्यते ॥

१६

विद्योत्तमा सदा ग्राह्या, नीचगापि महात्मभिः ।
अमेध्यपतितं स्वर्णं, न त्यजन्ति यथा बुधाः ॥

६

गुणिनोऽपि हि सीदन्ति, गुणग्राही न चेदिह।
सगुणः पूर्ण-कुम्भोऽपि कूप एव निमज्जति ॥

७

गुणाः सर्वत्र पूज्यन्ते पितृवंशो निरर्थकः।
[illegible] नमस्यन्ति वसुदेवं न मानवाः ॥

८

गुणमर्चन्ति जन्तूनां न जातिं केवलां क्वचित्।
स्फाटिकं भाजनं भग्नं काकिण्याऽपि न गृह्यते ॥

९

नागुणी गुणिनं वेत्ति गुणी गुणिषु मत्सरी।
गुणी च गुणरागी च विरलः सरलो जनः ॥

१०

परैः प्रोक्ता गुणा यस्य निर्गुणोऽपि गुणी भवेत्।
इन्द्रोऽपि लघुतां याति स्वयं प्रख्यापितैर्गुणैः ॥

११

गुणी गुणं वेत्ति न वेत्ति निर्गुणो
बली बलं वेत्ति न वेत्ति निर्बलः।

१३
विरलाः पण्डिता लोके विरलाश्च परीक्षकाः ।
विरलाः दुःखमेत्यन्ते ते एव जगदुत्तमाः ॥

---

## सत्संगः ।

१
संसारकटुवृक्षस्य द्वे फले ह्यमृतोपमे ।
सुभाषितरसास्वादः संगतिः सुजनैस्सह ॥

२
महाजनस्य संसर्गः, कस्य नोन्नतिकारकः ।
पद्मपत्रस्थितं वारि, धत्ते मुक्ताफलश्रियम् ॥

३
चन्दनं शीतलं लोके, चंद्रनादपि चन्द्रमाः ।
चन्द्रचन्दनयोर्मध्ये शीतला साधुसंगतिः ॥

४
साधूनां दर्शनं पुण्यं तीर्थभूता हि साधवः ।
कालेन फलते तीर्थं सद्यः साधुसमागमः ॥

५

काचः काञ्चनसंसर्गा–द्धत्ते मारकतीं द्युतिम् ।
तथा सत्संनिधानेन, मूर्खो याति प्रवीणताम् ॥

६

यदि सत्संगनिरतो, भविष्यसि भविष्यसि ।
अथ दुर्जनसंसर्गे, पतिष्यसि पतिष्यसि ॥

७

जाड्य धियो हरति सिंचति वाचि सत्यं ।
मानोन्नतिं दिशति पापमपाकरोति ॥
चेतः प्रसादयति दिक्षु तनोति कीर्तिं ।
सत्संगतिः कथय किं न करोति पुंसाम् ॥

८

को लाभो ? गुणिसङ्गमः, किमसुखः ? प्राज्ञेतरैः संगतिः ।
का हानि ? समयच्युतिर्निपुणता का ? धर्मतत्त्वे रति ॥
क शूरो ? विजितेन्द्रियः प्रियतमा काऽनुव्रता किं धन–
विद्या किं सुख ? मप्रवासगमनं, राज्य किमाज्ञाफलम् ॥

स्वात्या सागरशुक्तिसपुटगतं, तज्जायते मौक्तिक ।
प्रायेणाऽधममध्यमोत्तमगुण ससर्गतो जायते ॥

१४

सतोष साधुसङ्गश्च, विचारोऽथ शमस्तथा ।
एत एव भवाम्भोधा–वुपायास्तरणे नृणाम् ॥

१५

त्यज दुर्जनससर्गं भज साधुसमागमम् ।
कुरु पुण्यमहोरात्र, स्मर नित्यमनित्यताम् ॥

१६

पद्मानि राजहसाश्च, निर्ग्रन्थाश्च तपोधना ।
य देशमुपसर्पन्ति, तत्र देशे शिव भवेत् ॥

१७

मोक्षद्वारप्रतीहाराश्चत्वार परिकीर्तिताः ।
शमो विवेकः सन्तोषश्चतुर्थ साधुसङ्गम ॥

१८

कीटो भ्रमरयोगेन, भ्रमरो भवति ध्रुवम् ।
मानव शिवयोगेन, शिवो भवति निश्चितम् ॥

यथोक्ततत्त्व जिननाथभाषित ।
निसर्गमिथ्यात्वतिरस्कृतस्तथा ॥

१३

दुर्वचन पराधीन, शरीरे कष्टकारकम् ।
शल्य शल्यतर तस्मात्, मिथ्यात्व शल्यमात्मनि ॥

१४

शत्रुभिर्निहित शस्त्रं, शरीरे जगति नृणाम् ।
यथा व्यथा करोत्येव, तथा मिथ्यात्वमात्मन ॥

१५

मिथ्यात्वशल्यमुन्मूलय, स्वात्मान निर्मलीकुरु ।
यथाऽजस्र सुसिन्दूररजसा भुवि दर्पण ॥

१६

स्वाध्यायेन गुरोर्भक्त्या, दीक्षया तपसा तथा ।
येन केनोद्यमेनैव, मिथ्यात्वशल्यमुद्धरेत् ॥

१७

मिथ्यात्वमविरतिश्च, कषाया दुःखदायिन ।
प्रमादा दुष्टयोगाश्च, पञ्चैते बन्धकारणम् ॥

६

अनुमन्ता विशसिता, निहन्ता क्रयविक्रयी।
सस्कर्ता चोपहर्ता च, खादकश्चेति घातका. ॥

७

यो न हि कुरुते पाप, सर्वभूतेषु कर्हिचित् ।
कर्मणा मनसा वाचा, स ज्ञानी कथ्यते बुधै ॥

८

इन्द्रियाणि पशून् कृत्वा, वेदीं कृत्वा तपोमयीम् ।
अहिंसा आहुतीर्दद्यादेष यज्ञ. सनातन ॥

९

जले जन्तु स्थले जन्तुराकाशे जन्तुरेव च।
जन्तुमालाकुले लोके कथ भिक्षुरहिंसक. ॥

१०

सूक्ष्मा न प्रतिपीड्यन्ते, प्राणिन· स्थूलमूर्त्तय ।
ये शक्यास्ते विवर्ज्यन्ते, का हिंसा सयमात्मन. ? ॥

११

दु खोत्पत्तिर्मन क्लेश , तत्पर्यायस्य च क्षय ।
यस्या स्यात् सा प्रयत्नेन, हिंसा हेया विपश्चिता ॥

१८

जरायुजाण्डजोद्भिज्जस्वेदजानि कदाचन ।
ये न हिंसन्ति भूतानि, शुद्धात्मानो दयापरा. ॥

१६

अहिंसार्थाय भूताना, धर्मप्रवचन कृतम् ।
य. स्यादहिंसासयुक्त', स धर्म इति निश्चय. ॥

२०

अहिंसा परमो धर्मस्तथाऽहिंसा परो दमः ।
अहिंसा परम दानमहिंसा परमं तप ॥

२१

अहिंसा परमो यज्ञस्तथाऽहिंसा पर फलम् ।
अहिंसा परम मित्रमहिंसा परम सुखम् ॥

२२

सर्वयज्ञेषु वा दान, सर्वतीर्थेषु वाऽऽप्लुतम् ।
सर्वदानफल वाऽपि, नैतत् तुल्यमहिंसया ॥

२३

अहिंस्रस्य तपोऽक्षय्यमहिंस्रो यजते सदा ।
अहिंस्र सर्वभूतानां; यथा माता यथा पिता ॥

२४

अहिंसा परमं दानमहिंसा परमो दमः।
अहिंसा परमो यज्ञस्तथाऽहिंसा परं पदम्॥

२५

अहिंसा परमं ध्यानमहिंसा परमं तपः।
अहिंसा परम ज्ञानमहिंसा परमं पदम्॥

२६

अहिंसा परमो धर्मस्तथाऽहिंसा परं तपः।
अहिंसा परमं ज्ञानमहिंसा परमं पदम्॥

२७

अहिंसा परमो धर्मो ह्यहिंसैव परं तपः।
अहिंसा परमं दानमित्याहुर्मुनयः सदा॥

२८

अहिंसा परम दानमहिंसा परमो दमः।
अहिंसा परमो यागः, अहिंसा परम शुभम्॥

२९

सर्वयज्ञेषु यद्दानं सर्वतीर्थेषु यत्फलम्।
सर्वदानफलं वाऽपि तन्न तुल्यमहिंसया॥

३०

एतत्फलमहिंसाया भूयश्च कुरुपुङ्गव ! ।
न हि शक्ता गुणा वक्तुमपि वर्षशतैरपि ॥

३१

सर्ववेदाधिगमनं, सर्वतीर्थावगाहनम् ।
सर्वयज्ञफल चैव, नैव तुल्यमहिंसया ॥

३२

नास्त्यहिंसापर पुण्य, नास्त्यहिंसापरं सुखम् ।
नास्त्यहिंसापर ज्ञान, नास्त्यहिंसापरो दम. ॥

३३

दीर्घमायु पर रूपमारोग्य श्लाघनीयता ।
अहिंसाया फल सर्वं किमन्यत् कामदेव सा ॥

३४

लक्ष्मी. पाणितले तस्य, स्वर्गस्तस्य गृहाङ्गणे ।
कुरुते यो जन सर्वजीवरक्षा सदाऽऽदरात् ॥

# हिंसा।

१

दमो देवगुरूपास्तिर्दानमध्ययनं तपः ।
सर्वमप्येतदफलं हिंसां चेन्न परित्यजेत् ॥

२

कुर्याद्वर्षसहस्रं तु अहन्यहनि मज्जनम् ।
सागरेणापि कृत्स्नेन वधको नैव शुध्यति ॥

३

शमशीलदयामूलं हित्वा धर्मं जगद्धितम् ।
अहो ! हिंसाऽपि धर्माय जगदे मन्दबुद्धिभिः ॥

४

प्रमादेन यथा विद्या कुशीलेन यथा धनम् ।
कपटेन यथा मैत्री तथा धर्मो न हिंसया ॥

५

ये भक्षयन्त्यन्यपलं स्वकीयपलपुष्टये ।
त एव घातका यन्न वधको भक्षकं विना ॥

६

पङ्गु-कुष्ठि-कुणित्वादि, दृष्ट्वा हिंसाफलं सुधीः ।
निरागस्त्रसजन्तूनां, हिंसां संकल्पतस्त्यजेत् ॥

७

शिला समधिरूढाश्च, निमज्जन्ति जलान्तरे ।
हिंसाश्रिताश्च ते तद्वत्, समाश्रयन्ति दुर्गतिम् ॥

८

यावन्ति पशुरोमाणि, पशुगात्रेषु भारत ! ।
तावद्वर्षसहस्राणि, पच्यन्ते नरके नराः ॥

९

स कमलवनमग्नेर्वासरं भास्करास्ता-
दमृतमुरगवक्त्रात् साधुवादं विवादात् ।
रुगपगममजीर्णाज्जीवितं कालकूटा-
दभिलषति वधाद्यः प्राणिनां धर्ममिच्छेत् ॥



## दया ।

१

परस्मिन्बन्धुवर्गे वा मित्रे द्वेष्ये रिपौ तथा ।
आत्मवद्वर्तितव्यं हि दयैषा परिकीर्तिता ॥

२

सत्यं तीर्थं क्षमा तीर्थं तीर्थमिन्द्रियनिग्रहः ।
सर्वभूतदया तीर्थं सर्वत्रार्जवमेव च ॥

३

शान्तितुल्यं तपो नास्ति संतोषान्न सुखं परम् ।
नास्ति तृष्णासमो व्याधिर्न च धर्मो दयापरः ॥

४

न च विद्यासमो बन्धुर्न च व्याधिसमो रिपुः ।
न चापत्यसमः स्नेही न च धर्मो दयापरः ॥

५

मत्सरापरर्द्ध नित्यममत्वमविसर्जनम् ।
ध्यानहि महत्वं मोक्षं मुनिभिस्तत्त्वदर्शिभिः ॥

६

धर्मो जीवदयातुल्यो, न क्वापि जगतीतले।
तस्मात् सर्वप्रयत्नेन, कार्या जीवदयाऽङ्गिभिः॥

७

लावण्यरहित रूप, विद्यया वर्जित वपु।
जलत्यक्त स्मरो भाति, तथा धर्मो दयां विना॥

८

दयाऽङ्गना सदा सेव्या, सर्वकामफलप्रदा।
सेविताऽसौ करोत्याशु, मानसं करुणामयम्॥

६

अहिंसालक्षणो धर्मोऽधर्मश्च प्राणिनां वध।
तस्माद्धर्मार्थिभिर्लोकै, कर्तव्या प्राणिनां दया॥

१०

दयाहीनं निष्फल स्यान्नास्ति धर्मस्तु तत्र हि।
एते वेदा अवेदा स्युर्दया यत्र न विद्यते॥

११

सर्वे वेदा न तत् कुर्यु, सर्वे यज्ञाश्च भारत!।
सर्वे तीर्थाभिषेकाश्च, यत् कुर्यात् प्राणिनां दया॥

आरोग्य विगतान्तर त्रिजगति श्लाघ्यत्वमत्पेतर।
मन्माराम्बुनिधि करोति सुतर चेत· कृपार्द्रान्तरम्॥

१७

मम्मारे मानुष्य, सार मानुष्ये च कौलीन्यम्।
कौलीन्ये धर्मित्व, धर्मित्ये चापि सदयत्वम्॥

## यज्ञ।

१

निहतस्य पशोर्यज्ञे स्वर्गप्राप्तिर्यदीष्यते।
स्वपिता यजमानेन किं न तस्मिन्निहन्यते?॥

२

अश्व नैव गज नैव व्याघ्र नैव च नैव च।
अजापुत्र बलि दद्याद् दैवो दुर्बलघातक॥

३

नाह स्वर्गफलोपभोगतृषितो नाभ्यर्थितस्त्व मया।
संतुष्टस्तृणभक्षणेन सतत साधो! न युक्त तव॥
स्वर्गे यान्ति यदि त्वया विनिहता यज्ञे ध्रुव प्राणिनो।
यज्ञ किं न करोषि मातृपितृभि पुत्रैस्तथा बान्धवै·!॥

४

नानृतात्पापक किञ्चिन्न सत्यात्सुकृत परम् ।
विवेकान्न परो बन्धुरिति वेदविदो विदु ॥

५

सत्य ब्रूयात्प्रियं ब्रूयान्न ब्रूयात्सत्यमप्रियम् ।
नासत्य च प्रिय ब्रूयात् एष धर्म सनातन ॥

६

न पुत्रात्परमो लाभो, न भार्याया पर सुखम् ।
न धर्मात्परम मित्र, नानृतात्पातक परम् ॥

७

सत्यं जनविराधाय, असत्य जनरञ्जनम् ।
सुरा विक्रीयते स्थाने, दधि क्षीर गृहे गृहे ॥

८

सत्यमेव जयते नानृतम् ,सत्येन पन्था विततो देवयान
येनाक्रमन्त्यृष्यो ह्याप्तकामा,यत्र तत्सत्यस्य परमं निधानम्

९

सत्य सत्सु सदा धर्म , सत्य धर्म सनातन ।
सत्यमेव नमस्येत, सत्य हि परमा गति ॥

१०

मन्त्रं मृदु मिष्टं वाक्यं धीरो हितकरं वदेत् ।
आत्मोत्कर्षं तथा निन्दां परेषां परिवर्जयेत् ॥

११

सत्यमेव व्रतं यस्य दया दीनेषु सर्वदा ।
कामक्रोधौ वशे यस्य स साधुः कथ्यते बुधैः ॥

१२

नास्ति सत्यसमो धर्मो न सत्याद्विद्यते परम् ।
न हि तीव्रतरं किञ्चिद्-अनृतादिह विद्यते ॥

१३

सत्येन पूयते साक्षी धर्मः सत्येन वर्धते ।
तस्मात्सत्यं हि वक्तव्यं सर्ववर्णेषु साक्षिभिः ॥

१४

सत्यं स्वर्गस्य सोपानं पारावारस्य नौरिव ।
न पावनतमं किञ्चित्सत्यादभ्यधिकं क्वचित् ॥

१५

सत्यवचनं समाश्रित्य यत्कर्म कुरुते नरः ।
तदेव सफलं कर्म सत्यं जानीहि सुमते ॥

१६

ऋषयश्चैव देवाश्च, सत्यमेव हि मेनिरे।
सत्यवादी हि लोकेऽस्मिन्, पद गच्छति चाक्षयम् ॥

१७

भूमि कीर्तिर्यशो लक्ष्मी, पुरुष प्रार्थयन्ति हि ।
सत्य समनुवर्तन्ते, सत्यमेव भजेत्ततः ॥

१८

ये वदन्तीह सत्यानि, प्राणत्यागेऽप्युपस्थिते।
प्रमाणभूता भूताना, दुर्गाण्यति तरन्ति ते ॥

१६

न तत्त्ववचन सत्य, नातत्त्ववचन मृषा ।
यद्भूतहितमत्यन्तं, तत्सत्यमिति कथ्यते ॥

२०

सत्यहीना वृथा पूजा, सत्यहीनो वृथा जप ।
सत्यहीन तपो व्यर्थमूषरे वपन यथा ॥

२१

नास्त्यवादिन सख्य, न पुण्य न यशो भुवि ।
दृश्यते नापि कल्याण, कालकूटमिवाश्नत ॥

२२

यथार्थकथनं यच्च सर्वलोके सुखप्रदम्।
तत्सत्यमिति विज्ञेयमसत्यं तद्विपर्ययम्॥

२३

सत्येन रक्षते धर्मो विद्याऽभ्यासेन रक्षते।
मृज्यया रक्ष्यते रूपं कुलं वृत्तेन रक्ष्यते॥

२४

प्रिय पथ्य वचस्तथ्यं सूनृतव्रतमुच्यते।
तत्तथ्यमपि नो तथ्यमप्रियं चाहितं च यत्॥

२५

अग्निना सिच्यमानोऽपि वृक्षो वृद्धिं न चाप्नुयात्।
तथा सत्यं विना धर्मः पुष्टिं नायाति कर्हिचित्॥

२६

सत्ये प्रतिष्ठिता लोकाः धर्मः सत्ये प्रतिष्ठितः।
सत्ये प्रतिष्ठितं ध्यानं सर्वं सत्ये प्रतिष्ठितम्॥

२७

नास्ति सत्यात् परो धर्मो नानृतात् पातकं परम्।
स्थितिर्हि सत्यं धर्मस्य तस्मात्सत्यं न लोपयेत्॥

२८

तस्याऽग्निर्जलमर्णवः स्थलमरिर्मित्रं सुराः किंकराः ।
कान्तारं नगरं गिरिर्गृहमहिर्माल्यं मृगारिर्मृगः ॥
पातालं बिलमस्त्रमुत्पलदलं व्यालः शृगालो विषं ।
पीयूषं विषमं समं च वचनं सत्याञ्चितं वक्ति यः ॥

२९

चञ्चन्मस्तकमौलिरत्नविकटज्योतिश्छटाडम्बरै—
र्देवाः पल्लवयन्ति यच्चरणयोः पीठे लुठन्तोऽप्यमी ॥
कुर्वन्ति ग्रहलोकपालखचरा यत्प्रातिहार्यं नृणाम् ।
शाम्यन्ति ज्वलनादयश्च नियतं तत्सत्यवाचः फलम् ॥

---

## असत्य ।

१

कामाल्लोभाद्भयात्क्रोधात् साक्षिवादात्तथैव च ।
मिथ्या वदति यत्पापं, तदसत्यं प्रकीर्तितम् ॥

२

कन्या–गो–भूम्यलीकानि, न्यासापहरणं तथा ।
कूटसाक्ष्यं च पञ्चेति, स्थूलासत्यानि संत्यजेत् ॥

९

धर्महानिरविश्वासो, देहार्थव्यसन तथा ।
असत्यभाषिणा निन्दा, दुर्गतिश्चोपजायते ॥

१०

असत्यवक्तुर्भुवि पक्षपातं, कुर्यान्न विद्वान् किल सङ्कटेऽपि
तेन ध्रुव हि वसुराजवत् स, इहापवाद नरकं परत्र ॥

११

मूकता मतिवैकल्य मूर्खता बोधविच्युति ।
बाधिर्यं मुखरोगित्वमसत्यादेव देहिनाम् ॥

१२

कुटुम्ब जीवित वित्त यद्यसत्येन वर्द्धते ।
तथापि युज्यते वक्तुं नासत्य शीलशालिभि ॥

---

## अचौर्य ।

१

प्रच्छन्न वा प्रकाश वा, निशायामथवा दिवा ।
स्यात् परद्रव्यहरणं स्तेयं तत्प्रकीर्तितम् ॥

८

अन्ये ये ये नरा लोके, चौर्यकर्मप्रभावत ।
दु'ख हि परमं प्राप्ता, कस्तांस्तान् कथयितु क्षम' ॥

९

वित्तमेव मत सूत्रे, प्राणा बाह्या' शरीरिणाम् ।
तस्यापहारमात्रेण, स्युस्ते प्रागेव घातिता ॥

१०

अनादानमदत्तस्यास्तेयव्रतमुदीरितम ।
बाह्यप्राणा नृणामर्थो, हरता त हता हि ते ॥

११

परार्थग्रहणे येषा, नियम शुद्धचेतसाम् ।
अभ्यायान्ति श्रियस्तेषा, स्वयमेव स्वयवरा ॥

१२

यदा सर्व परद्रव्य, बहिर्वा यदि वा गृहे ।
अदत्त नैव गृह्णाति, ब्रह्म सपद्यते तदा ॥

१३

पतित विस्मृत नष्ट स्थित स्थापितमाहितम् ।
अदत्त नाददीत स्व परकीय क्वचित्सुधी ॥

३

अनिष्टः खेचरे घूक, स्वामिद्रोही नरेषु च।
अनिष्टादप्यनिष्ट च, अदत्तमपलक्षणे ॥

४

अदत्तादानमाहात्म्यमहो वाचामगोचरम्।
यदर्थमाददानानामनर्थोऽभ्येति सद्मनि ॥

५

दौर्भाग्य प्रष्यतां दास्यमङ्गच्छेद दरिद्रताम्।
अदत्तात्तफल ज्ञात्वा स्थूलस्तेय विवर्जयेत् ॥

६

यातनां विविधामत्र, परत्र नरके गतिम्।
दौर्भाग्य च दरिद्रत्वं लभते चौर्यतो नर ॥

७

कातराणां यथा धैर्यं, वन्ध्यानां संततिर्यथा।
न विश्वासस्तथा लोके, नृणामदत्तहारिणाम् ॥



# ब्रह्मचर्यम् ।

१

ब्रह्मचर्यं परं शौचं ब्रह्मचर्यं परन्तपः ।
ये स्थिता ब्रह्मचर्येण ब्राह्मणास्ते दिवं गताः ॥

२

धर्म्यं यशस्यमायुष्यं लोकद्वयरसायनम् ।
अनुमोदामहे ब्रह्मचर्यमेकान्तनिर्मलम् ॥

३

अप्रमत्तस्य यद्गुणाग्नो वीरः प्रकीर्तिता ।
समस्तव्रतस्य तद्रूपं ब्रह्मचर्यं प्रकीर्तितम् ॥

४

नीरोगा आयुषसम्पन्नाः, सर्वदुःखविवर्जिताः ।
ब्रह्मचारी सर्वलोके पाप्मना च विवर्जितः ॥

५

...षि गुरुत्वेन लोकेऽस्मिन् साधन।
॥

६

यथा गजपदे सर्वे, पादा अन्तर्भवन्ति हि ।
नैतस्मादधिकं किञ्चिद्, ब्रह्मचर्याद्धि विद्यते ॥

७

सर्वसाधनसम्पन्ना ब्रह्मचर्यविवर्जिता ।
क्लेशं हि मुनयो भेजुर्विद्वांसोऽपि च कोटिशः ॥

८

कर्मणा मनसा वाचा, सर्वावस्थासु सर्वदा ।
सर्वत्र मैथुनत्यागो, ब्रह्मचर्यं प्रचक्षते ॥

९

आजन्ममरणाद्यस्तु, ब्रह्मचारी भवेदिह ।
न तस्य किञ्चिदप्राप्यमिति विद्धि नराधिप ! ॥

१०

आयुस्तेजो बलं वीर्यं, प्रज्ञा श्रीश्च महायशः ।
पुण्यञ्च प्रीतिमत्त्वं च, हन्यतेऽब्रह्मचर्यया ॥

११

मरणं बिन्दुपातेन जीवनं बिन्दुधारणात् ।
तस्माद्यति प्रयत्नेन, कुरुते बिन्दुधारणम् ॥

१८

शान्ति कान्ति स्मृतिं ज्ञान—मारोग्यञ्चापि सन्ततिम् ।
य इच्छति महद्धर्म, ब्रह्मचर्यं चरेदिह ॥

१९

ब्रह्मचर्यं परं ज्ञान, ब्रह्मचर्यं परं बलम् ।
ब्रह्मचर्यमयो ह्यात्मा, ब्रह्मचर्यैव तिष्ठति ॥

२०

पुष्प दृष्ट्वा फल दृष्ट्वा, दृष्ट्वा योषित्यौवनम् ।
त्रीणि रत्नानि दृष्ट्वैव, कस्य नोच्चलते मन ? ॥

२१

पिता यस्य शुचिर्भूतो, माता यस्य पतिव्रता ।
ताभ्यां य सुनुरुत्पन्नस्तस्य नोच्चलते मन ॥

२२

अग्निकुण्डसमा नारी, घृतकुम्भसमो नरः ।
जानुस्थिता परस्त्री चेत्कस्य नोच्चलते मन. ? ॥

२३

मनो धावति सर्वत्र, मदोन्मत्तगजेन्द्रवत् ।
ज्ञानाङ्कुशे समुत्पन्ने, तस्य नोच्चलते मन. ॥

३०

स्नानमुद्वर्तनाभ्यङ्ग, नखकेशादिसंक्रियाम् ।
गन्ध-माल्यं प्रदीप च त्यजन्ति ब्रह्मचारिण ॥

३१

ब्रह्मचर्यं ध्रुव यज्ञ, परब्रह्मैककारणम् ।
देहशोभा तदर्थं हि, त्यज्यते ब्रह्मचारिभि ॥

३२

य स्वदारेषु सन्तुष्ट, परदारपराङ्मुख ।
स गृही ब्रह्मचारित्वाद् यतिकल्प प्रकल्प्यते ॥

३३

योनियन्त्रसमुत्पन्ना, सुसूक्ष्मा जन्तुराशय ।
पीड्यमाना विपद्यन्ते यत्र तन्मैथुन त्यजेत् ॥

३४

रम्यमापातमात्रे यत् परिणामेऽति दारुणम् ।
किंपाकफलसकाशं तत् क सेवेत मैथुनम् ॥

३५

कम्प स्वेद श्रमो मूर्छा भ्रमिर्ग्लानिर्बलक्षय ।
राजयक्ष्मादिरोगाश्च भवेयुर्मैथुनोत्थिता ॥

५

स्मरदहनसुतीव्रानन्तसन्तापविद्धं,
भुवनमिति समस्तं वीक्ष्य योगिप्रवीराः ।
विगतविषयसङ्गाः प्रत्यहं मश्रयन्ते,
प्रशमजलधितीरं संयमारामरम्यम् ॥

६

परिभवफलवल्लीं दुःखदावानलालीम्,
विषयजलधिवेलां श्वभ्रसौधप्रतोलीम्।
मदनभुजगदंष्ट्रां मोहतन्द्राससवित्रीम्,
परिहर परिणामैर्धैर्यमालम्ब्य नारीम् ॥

७

यासां सीमन्तिनीनां कुरवकतिलकाशोकमाकन्दवृक्षाः,
प्राप्योच्चैर्विक्रियन्ते ललितभुजलताऽऽलिङ्गनादीन्विलासान्
तासां पूर्णेन्दुगौरं मुखकमलमलं वीक्ष्य लीलारसाढ्यम्
को योगी यस्तदानीं कलयति कुशलो मानसं निर्विकारम्

८

तावद्वृत्ते प्रतिष्ठां परिहरति मनश्चापलं चैष तावत्,
तावत्सिद्धान्तसूत्रं स्फुरति हृदि परं विश्वतत्त्वैकदीपम्।

२

ममारम्भमारम्भास्तेषां हेतुः परिग्रहः ।
तस्मादुपासकः कुर्यादल्पमल्पं परिग्रहे ॥

३

असतोपमविश्वासमारम्भं दुःखकारणाम् ।
मत्वा मूर्छाफलं कुर्यात्, परिग्रहनियन्त्रणम् ॥

४

करोति हे दैत्यसुत! यावन्मात्रं परिग्रहम्।
तावन्मात्रं स एवास्य, दुःखं चेतसि यच्छति ॥

५

परिग्रहार्थमारम्भममतोपाद्भिनवन्ते ।
ममारवृद्धिस्तेनैव, गृहीतं तदिदं व्रतम् ॥

६

परिग्रहमहत्त्वाद्धि, मज्जत्येव भवाम्बुधौ ।
महापोत इव प्राणी, त्यजेत् तस्मात् परिग्रहम् ॥

७

सर्वभावेषु मूर्छायास्त्यागः स्यादपरिग्रहः ।
यदसत्स्वपि जायेत, मूर्छया चित्तविप्लवः ॥

१३

एवं तावदह लभेय विभव रद्येयमेव तत—
स्तद्वृद्धिं गमयेयमेवमनिश भुञ्जीय चैव पुन ।
द्रव्याशारसरुद्धमानस ! भृश नात्मानमुत्पश्यसि,
कुद्धयत्क्रूरकृतान्तदन्तपटलीयन्त्रान्तरालस्थितम् ॥



## रात्रि भोजन निषेध ।

१

घोरान्धकार रुद्धाक्षै, पतन्तो यत्र जन्तव ।
नैव भोज्ये निरीक्ष्यन्ते, तत्र भुञ्जीत को निशि ? ॥

२

मेधां पिपीलिका हन्ति, यूका कुर्याज्जलोदरम् ।
कुरुते मक्षिका वान्ति, कुष्टरोगं च कोलिक ॥

३

कण्टक दारुखण्ड च, स्वरभङ्गाय जायते ।
इत्यादयो दृष्टदोषा, सर्वेषा निशि भोजने ॥

१०

उलूक काकमार्जार—गृध्रशंबरशूकरा ।
अहिवृश्चिकगोधाश्च, जायन्ते रात्रिभोजनात् ॥

११

हृन्नाभिपद्मसङ्कोच—श्चण्डरोचिरपायत ।
अतो नक्तं न भोक्तव्य, सूक्ष्मजीवादनादपि ॥

१२

हिंस्यन्ते प्राणिन सूक्ष्मा, यत्राश्नुत्यभिभक्ष्यते ।
तद्रात्रिभोजन सतो, न कुर्वन्ति दयापरा. ॥

१३

वासरे च रजन्या च, य खादन्नेव तिष्ठति ।
शृङ्गपुच्छपरिभ्रष्ट, स्पष्ट स पशुरेव हि ॥

१४

स्वपरसमये गर्ह्यं, श्राय श्वभ्रस्य गोपुरम् ।
सर्वज्ञैरपि यत्यक्त पापाढ्य रात्रिभोजनम् ॥

१५

करोति विरतिं धन्यो, य सदा निशिभोजनात् ।
सोऽर्धं पुरुषायुषस्य, स्यादवश्यमुपोषित ॥

# सामायिक।

१

त्यक्तार्त्तरौद्रध्यानस्य, त्यक्तसावद्यकर्मणः।
मुहूर्तं समता या तां, विदुः सामायिकव्रतम् ॥

२

समता सर्वभूतेषु, संयमः शुभभावना।
आर्त्तरौद्रपरित्यागस्तद्धि सामायिकं व्रतम् ॥

३

मुहूर्तावधिसावद्य-व्यापारपरिवर्जनम्।
आद्यं शिक्षाव्रतं सामायिकं स्यात् समताजुषः ॥

४

सामायिकं स्यात् त्रिविधं, सम्यक्त्वं च श्रुतं तथा।
चारित्रं तृतीयं तच्च, गृहिकमनगारिकम् ॥

५

रागादिध्वान्तविध्वंसे, कृते सामायिकांशुना।
स्वस्मिन् स्वरूपं पश्यन्ति, योगिनः परमात्मनः ॥

११

तस्यैवाविचल सौख्य तस्यैव पदमव्ययम्।
तस्यैव बन्धविश्लेष समत्व यस्य योगिन ॥

## पौषध व्रत।

१

चतुष्पर्व्यां चतुर्थादि—कुव्यापारनिषेधनम्।
ब्रह्मचर्य क्रियास्नाना—दित्याग पौषधव्रतम् ॥

२

चत्वारि सन्ति पर्वाणि, मासे तेषु विधीयते।
उपवास सदा यत्तत्, पौषधव्रतमीर्यते ॥

३

सर्वारम्भपरित्यागात्, पाक्षिकादिषु पर्वसु।
विधेय पौषधोऽजस्र—मिव सूर्ययशा नृपः ॥

४

चतुर्दश्यष्टमीराको—द्दिष्टा–पर्वसु पौषधः।
विधेयः सौधस्थेनेत्थ, पर्वाण्याराधयेद्गृही ॥

३

पुष्पाणि चारवस्त्राणि, गन्धमाल्यानुलेपनम् ।
उपवासे न शुध्यंति, दन्तधावनमञ्जनम् ॥

४

कषायविषयाहार—त्यागो यत्र विधीयते ।
उपवास. स विज्ञेय., शेष लङ्घनकं विदुः ॥

५

उपावृत्तस्य पापेभ्यो, यस्तु वासो गुणैः सह ।
उपवास स विज्ञेय, सर्वभोगविवर्जितः ॥

६

कर्मेन्धन यदज्ञानात्, संचितं जन्मकानने ।
उपवासशिखी सर्वं, तद्भस्मीकुरुते क्षणात् ॥

---

## अतिथि व्रत ।

१

हिरण्ये वा सुवर्णे वा, धने धान्ये तथैव च ।
अतिथिं तं विजानीयाद्यस्य लोभो न विद्यते ॥

२

गृहिणोऽपि हि धन्यास्ते पुण्यं ये पौषधव्रतम्।
दुष्पालं पालयन्त्येव यथा स सुव्रतीपिता॥

३

सर्वेष्वपि तपोयोगः प्रशस्तः कालपर्वसु।
अष्टम्यां पञ्चदश्यां च नियतं पौषधं वसेत्॥

४

पोषं धर्मस्य धत्ते यत् तद्भवेत् पौषधव्रतम्।
चतुष्पर्वी समाख्यात—माहारपौषधादिकम्॥

---

## उपवास।

१

स्पर्शभोगोपभोगानां सर्वेषामभिमोक्षितः॥
चतुर्विधाशनत्याग उपवासो मतो बुधैः॥

२

असकृज्जलपानाद्, ताम्बूलस्य च भक्षणात्।
उपवासः प्रणश्येत दिवास्वापाच्च मैथुनात्॥

८

कोविदो वाऽथवा मूर्खो, मित्रं वा यदि वा रिपु. ।
निदान स्वर्गभोगाना—मशनावसरेऽतिथि ॥

---

## अतिथि-सत्कारः ।

१

सम्प्राप्ताय त्वतिथये, प्रदद्यादासनोदके ।
अन्न चैव यथाशक्ति, सत्कृत्यविधि पूर्वकम् ॥

२

श्रद्धया चान्नदानेन, प्रियप्रश्नोत्तरेण च ।
गच्छतश्चानुयानेन, प्रीतिमुत्पादयेद् गृही ॥

३

अतिथि पूजितो यस्य, गृहस्थस्य तु गच्छति ।
नान्यस्तस्मात्परो धर्म इति प्राहुर्मनीषिण ॥

४

पात्रन्त्वतिथिमासाद्य, शीलाढ्यं यो न पूजयेत् ।
स दत्वा दुष्कृत तस्मै, पुण्यमादाय गच्छति ॥

---

६

क्रोधात्प्रीतिविनाश, मानाद्विनयोपघातमाप्नोति ।
शाठ्यात्प्रत्ययहानिं, सर्वगुणविनाशनं लोभात् ॥

७

निरय क्रोधात्तपो रक्षेच्छिद्रय रक्षेच्च मत्सरात् ।
विद्या मानापमानाभ्यामात्मान च प्रमादत ॥

८

हन्तव्य· क्षमया क्रोधो, मानो मार्दवयोगत ।
माया चार्जवभावेन, लोभ सतोषपोपत· ॥

९

क्षमया मृदुभावेन, ऋजुत्वेनाप्यनीहया ।
क्रोध मान तथा मायां, लोभ रुन्ध्याद् यथाक्रमम् ॥

१०

विषयोरगदष्टस्य, कपायविपमोहिन ।
सयमो हि महामन्त्रस्त्राता सर्वत्र देहिन ॥

११

कपायविजये सौख्यमिन्द्रियाणा च निग्रहे ।
जायते परमोत्कृष्ट—मात्मनो भवभेदियत् ॥

# कषाय।

१

पक्ष संज्वलनः प्रत्याख्यानो मासचतुष्टयम्।
अप्रत्याख्यानको वर्षं जन्मानन्तानुबन्धकः॥

२

कषायकलुषो जीवो रागरंजितमानसः।
चतुर्गतिभवाम्भोधौ भिन्ननौरिव सीदति॥

३

कषायविषयार्त्तानां, देहिनां नास्ति निर्वृतिः।
तयो च विरमे सौख्यं जायते परममद्भुतम्॥

४

कामः क्रोधश्च लोभश्च देहे तिष्ठन्ति तस्कराः।
ज्ञानरत्नापहारि तस्माज्जागृत जागृत॥

५

कषायान् शत्रुवत् पश्येद् विषयान् विषवत्तथा।
मोह च परम व्याधिमेवमूचुर्विचक्षणाः॥

४

क्रोधो नाशयते धैर्यं, क्रोधो नाशयते श्रुतम्।
क्रोधो नाशयते सर्वं, नास्ति क्रोधसमो रिपु॰ ॥

५

यस्तु क्रोधं समुत्पन्न, प्रज्ञया प्रतिबाधते ।
तेजस्विनन्त विद्वासो, मन्यते तत्त्वदर्शिन॰ ॥

६

अश्वारोहं यथा दुष्टो, वाजि॰ गर्ते निपातयेत्।
एव क्रोधोऽपि नरके, नरमाशु निपातयेत् ॥

७

क्रुद्धः पापं नरः कुर्यात्क्रुद्धो हन्याद्गुरूनपि।
क्रुद्ध॰ परुपया वाचा, श्रेयांस्यवमन्यते ॥

८

एतान्दोषान्प्रपश्यद्भिर्जित॰ क्रोधो मनीषिभि ।
इच्छद्भि॰ परम श्रेय, इह चामुत्र चोत्तमम् ॥

९

मातर पितर पुत्रं, भ्रातरं वा सुहृत्तमम्।
[illegible] ेष्टो नरो हन्ति॰ स्वामिन वा सहोदरम् ॥

१५

मासोपवासनिरतोऽस्तु तनोतु सत्यम्,
ध्यान करोतु विदधातु बहिर्निवासम्।
ब्रह्मव्रत धरतु भैक्ष्यरतोऽस्तु नित्यम्,
रोष करोति यदि सर्वमनर्थक तत् ॥

१६

भ्रूभगभगुरमुखो विकरालरूपो,
रक्तेक्षणो दशनपीडितदतवासा ।
त्रासगतोति मनुजो जननिथवेष,
क्रोधेन कपिततनुर्भुवि राक्षसो वा ॥

१७

अत्यन्त क्रोधसतप्ता, मृतास्ते सर्पमागता।
अद्यापि तत्स्वभावेन, फूत्कारै भीषणा ननु ॥

१८

क्रोधान्धा पश्य निघ्नन्ति, पितर मातर गुरुम्।
सुहृद सोदर दाराानात्मानमपि निर्घृणा ॥

१९

... त, श्रान्त क्रुद्धो बुभुक्षित.।
... त्वरायुक्त', कामुकश्च न धर्मवित् ॥

१५
मासोपवासनिरतोऽस्तु तनोतु सत्यम्,
ध्यानं करोतु विदधातु बहिर्निवासम्।
ब्रह्मव्रतं धरतु भैक्ष्यरतोऽस्तु नित्यम्,
रोषं करोति यदि सर्वमनर्थकं तत्॥

१६
भ्रूभङ्गभङ्गुरमुखो विकरालरूपो,
रक्तेक्षणो दशनपीडितदन्तवासाः।
त्रासं करोति मनुजो जननिश्चयेषु,
क्रोधेन कम्पिततनुर्भुवि राक्षसो वा॥

१७
अत्यन्त क्रोधसन्तप्ताः, मृतास्ते सर्पतां गताः।
अद्यापि तत्स्वभावेन, फूत्कारे भीषणा ननु॥

१८
क्रोधान्धा पश्य निघ्नन्ति, पितरं मातरं गुरुम्।
सुहृदं सोदरं दारानात्मानमपि निर्घृणाः॥

१९
मत्तः प्रमत्तश्चोन्मत्तः, श्रान्तः क्रुद्धो बुभुक्षितः।
लुब्धो भीरुस्त्वरायुक्तः, कामुकश्च न ध

१५

मासोपवासनिरतोऽस्तु तनोतु सत्यम्,
ध्यान करोतु विदधातु बहिर्निवासम्।
ब्रह्मव्रत धरतु भैक्ष्यरतोऽस्तु नित्यम्,
रोष करोति यदि सर्वमनर्थक तत् ॥

१६

भ्रूभगभगुरमुखो विकरालरूपो,
रक्तेक्षणो दशनपीडितदतवासा।
त्रासगतोति मनुजो जननिंद्यवेष,
क्रोधेन कपिततनुर्भुवि राक्षसो वा ॥

१७

अत्यन्त क्रोधसतप्ता, मृतास्ते सर्पमागता।
अधापि तत्स्वभावेन, फूत्कारै भीषणा ननु ॥

१८

क्रोधान्धा पश्य निघ्नन्ति, पितर मातर गुरुम्।
सुहृद सोदर दाराानात्मानमपि निर्घृणा ॥

१९

मत्त प्रमत्तश्चोन्मत्त, श्रान्त क्रुद्धो बुभुक्षित।
लुब्धो भीरुस्त्वरायुक्त, कामुकश्च न धर्मवित् ॥

## क्लेश ।

१

स्तोकोऽप्यग्निर्दहत्येव, काष्ठादिप्रभृत घनम् ।
क्लेशलेशोऽत्र तद्वत्, वृद्धितस्तनुदाहक. ॥

२

आत्मान तापयेन्नित्य, तापयेच्च परानपि ।
उभयोर्दु खकृत्क्लेशो, यथोष्णा रेणुका क्षितौ ॥



## क्षमा ।

१

क्षमा शस्त्र करे यस्य, दुर्जन किं करिष्यति ।
अतृणे पतितो वह्नि, स्वयमेवोपशाम्यति ॥

२

क्षमा बलमशक्ताना, शक्ताना भूषण क्षमा ।
क्षमा वशीकृतिर्लोके, क्षमया किन्न साध्यते ॥

९

दद्तु दद्तु गालीर्गालिमन्तो भवन्तो,
वयमिह तदभावाद्गालिदानऽसमर्थाः ।
जगति विदितमेतद्दीयते विद्यमानं,
न तु शशकविषाणं कोऽपि कस्मै ददाति ॥

१०

मेतार्यश्च सुकोशलो गजमुनिश्छिन्नत्वचः स्खन्धक ।
शिष्या स्खधकचण्डरुद्रकृतिनो चन्द्रावतंसो नृप ॥
चन्द्राभिधर्दमदन्तकूरगडुकौ गाढप्रहारी मुनि—
रघ्रङ्कारि मृगावतिप्रभृतयस्तीर्णा क्षमानौकया ॥

११

बाह्ये चाध्यात्मिके चैव दुःखे चोत्पादिते क्वचित् ।
न कुप्यति न वा हन्ति सा क्षमा परिकीर्तिता ॥

१२

शम एव परं तीर्थं, शम एव परं तपः ।
शम एव परं ज्ञानं, शमो योगः परस्तथा ॥

१३

क्षान्तिरेव महादानं, क्षान्तिरेव महातपः ।
क्षान्तिरेव महाज्ञानं, क्षान्तिरेव महादमः ॥

२

अगाधजलसंचारी, न गर्वं याति रोहितः।
अगुष्ठोदकमात्रेण, शफरी फर्फरायते ॥

३

खद्योतो द्योतते तावद्यावन्नोदयते शशी।
उदिते तु सहस्रांशौ, न खद्योतो न चन्द्रमाः ॥

४

विषभारसहस्रेण, गर्वं नायाति वासुकिः।
वृश्चिको बिन्दुमात्रेण, ऊर्ध्वं वहति कण्टकम् ॥

५

दिव्य आम्ररस पीत्वा, गर्वं नो याति कोकिल ।
पीत्वा कर्दमपानीय, भेको टरटरायते ॥

६

गङ्गादीनां सकलसरिता प्राप्य तोयं समुद्र ।
किञ्चिद्गर्वी न भवति पुनर्दिव्यरत्नाकरोऽपि ॥
एको भेकः परममुदित प्राप्य गोष्पादनीर।
को मे को मे रटति बहुधा स्पर्धया विश्वमुच्चैः ॥

१२

अल्पतोयश्चलत्कुम्भो, ह्यल्पदुग्धाश्च धेनवः।
अल्पविद्यो महागर्वी कुरूपी बहुचेष्टितः॥

१३

अत्यहङ्कारयोगेन, ते भवन्ति खरा नराः।
अद्यापि तत्स्वभावेन, हु हु कुर्वन्ति सर्वदा॥

१४

अरण्यज तरोः पुष्पं, समुद्राम्भश्च शीतलम्।
लावण्यं दर्शिना तद्वन्मानिमनः निरर्थकम्॥

१५

मा तात! साहसं कार्षीर्विभवैर्गर्वमागतः।
स्वगात्राण्यपि भाराय, भवन्ति हि विपर्यये॥

१६

विनयश्रुतशीलानां, त्रिवर्गस्य च घातकः।
विवेकलोचनं लुम्पन्, मानोऽन्धङ्करणो नृणाम्॥

१७

अहङ्कारो हि लोकानां, नाशाय न तु वृद्धये।
यथा विनाशकाले स्यात्, प्रदीपस्य शिखोज्ज्वला॥

२

असूनृतस्य जननी, परशु. शीलशाखिन ।
जन्मभूमिरविद्यानां, माया दुर्गतिकारणम् ॥

३

दौर्भाग्यजननी माया, माया दुर्गतिदायिनी ।
नृणा स्त्रीत्वप्रदा माया, ज्ञानिभिस्त्यज्यते तत ॥

४

कौटिल्यपटव पापा मायया बकवृत्तय ।
भुवन वञ्चयमाना, वञ्चयन्ते स्वमेव हि ॥

५

दम्भेन व्रतमास्थाय, यो वाञ्छति पर पदम् ।
लोहनाव समारुह्य, सोऽब्धे पारं यियासति ॥

६

प्राक् पादयो॰ पतति खादति पृष्ठमांस ।
कर्णे कल किमपि रौति शनैर्विचित्रम् ॥
छिद्र निरूप्य सहसा प्रविशत्यशङ्कः ।
सर्वं खलस्य चरित मशक करोति ॥

## दम्भ ।

१

जटाभारविनिर्युक्ता, दाम्भिका वेषधारिणः ।
भ्रमन्ति ज्ञानिवल्लोके, भ्रामयन्ति जनानपि ॥

२

मृद्भस्मोद्धूलनादेव, मुक्ताः स्युर्यदि मानवाः ।
मृद्भस्मवासी नित्यं श्वा, स किं मुक्तो भविष्यति ॥

३

तृणपर्णोदकाहाराः सततं वनवासिनः ।
जम्बुकाखुमृगाद्याश्च, तापसास्ते भवन्ति किम् ॥

४

आजन्ममरणान्तं च गङ्गादितटिनीस्थिताः ।
मण्डूका मत्स्यप्रमुखा योगिनस्ते भवन्ति किम् ॥

५

पारावताः शिलाहाराः, कदाचिदपि चातकाः ।
न पिबन्ति महीतोयं, व्रतिनस्ते भवन्ति किम् ॥

# लोभ ।

१

लोभमूलानि पापानि, रसमूलानि व्याधय ।
स्नेहमूलानि दु खानि, त्रीणि त्यक्त्वा सुखी भव ॥

२

गुरवो यत्र पूज्यते, वित्त यत्र नयार्जित ।
अदन्तकलहो यत्र, तत्र शक्र[1] वसाम्यहम् ॥

३

द्यूतपोषी निजद्वेषी, धातुवादी सदालस ।
आयव्ययमनालोची तत्र तिष्ठाम्यह हरे ॥

४

अति लोभो न कर्तव्यो, लोभो नैव च नैव च ।
अति लोभाभिभूतात्मा, सागर सागर गत ॥

५

जनक सर्वदोषाणा, गुणग्रसनराक्षस ।
कंदो व्यसनवल्लीना, लोभ सर्वार्थबाधक ॥

११

एकं दृष्ट्वा शत दृष्ट्वा, दृष्ट्वा पञ्चशतान्यपि ।
अतिलोभो न कर्तव्यश्चक्र भ्रमति मस्तके ॥

१२

लोभमूलानि पापानि, लाभाल्लोभो विवर्धते।
त्रिमापघटित कार्यं, त्रिकोट्यापि न पूर्यते ॥

१३

लोभश्चेदगुणेन किं पिशुनता यद्यस्ति किं पातकै ।
सत्य चेत्तपसा च किं शुचिमनो यद्यस्ति तीर्थेन किम् ॥
सौजन्य यदि किं गुणै सुमहिमा यद्यस्ति किं मण्डनै ।
सद्विद्या यदि किं धनैरपयशो यद्यस्ति किं मृत्युना ॥

१४

शेते नित्य शटितपटके मञ्चके भग्नपादे।
भुङ्क्ते स्तोक तदपि कुथित जीर्णमन्न क्षुधार्त ॥
धत्ते शीर्णं मलमलिनतर वस्त्रखण्ड च कक्ष्या–
मेव लोभी द्रविणमधिक प्रत्यह सञ्चिनोति ॥

१५

वस्त्राणि सीव्यति तनोति विचित्रचित्र,
मृत्काष्ठलोहकनकादिविधिं चिनोति ।

२१

वर्धस्व जीव जय नन्द विभो चिर त्व—
मित्यादिचाटुवचनानि विभापमाण. ।
दीनाननो मलिनर्निदितरूपधारी,
लोभाकुलो वितनुते सधनस्य सेवाम् ॥

२२

यद् दुर्गामटवीमटन्ति विकट क्रामन्ति देशान्तर।
गाहन्ते गहनसमुद्रमतनुक्लेशा कृषिं कुर्वते ॥
सेवन्ते कृपणा पतिं गजघटासघट्टदुस्सञ्चर।
सर्पन्ति प्रधन धनान्धितधियस्तल्लोभविस्फूर्जितम् ॥

२३

दिनयामिन्यौ साय प्रात , शिशिरवसन्तौ पुनरायात ।
काल क्रीडति गच्छत्यायु , तदपि न मुञ्चत्याशावायु ॥

२४

आशा हि लोकान् बध्नाति, कर्मणा बहुचिंतया।
आयु क्षय न जानासि, तस्माज्जागृत जागृत ॥

२५

भूशय्या भैक्षमशन, जीर्णं वासो वन गृहम्।
तथाऽपि नि स्पृहस्याहो, चक्रिणोऽप्यधिक सुखम्॥

३२

प्राप्योपशान्तमोहत्व, क्रोधादिविजये सति।
लोभांशमात्रदोषेण, पतन्ति यतयोऽपि हि॥

३३

सर्पोऽनिष्टोऽथवा लोभो, द्वयोर्लोभस्त्वनिष्टक·।
दशेन्न मर्दित· सर्पो, लोभो दशति सर्वदा॥

३४

न सहस्राद्भवेत्तुष्टिर्न, लक्षान्न च कोटिभि।
न राज्यान्न च देवत्वान्नेन्द्रत्वादपि देहिनाम्॥

३५

आकांक्षितानि जन्तूनां, सपद्यन्ते यथा यथा।
तथा तथा विशेषाप्तौ, मनो भवति दु·खितम्॥

३६

इच्छति शती सहस्र, सहस्री लक्षमीहते।
लक्षाधिपस्ततो राज्य, राज्याच्च स्वर्गमीहते॥



६

उत्खात निधिशङ्कया क्षितितलं ध्माता गिरेर्धातवो ।
निस्तीर्णः सरितां पतिर्नृपतयो यत्नेन सन्तोषिता ॥
मन्त्राराधनतत्परेण मनसा नीता श्मशाने निशाः ।
प्राप्तः काणवराटकोऽपि न मया तृष्णेऽधुना मुञ्च माम् ॥

७

भ्रान्तं देशमनेकदुर्गविषमं प्राप्तं न किञ्चित्फलं ।
त्यक्त्वा जातिकुलाभिमानमुचितं सेवा कृता निष्फला ॥
भुक्तं मानविवर्जितं परगृहेष्वाशङ्कया काकवत् ।
तृष्णे ! जृम्भसि पापकर्मनिरते ! नाद्यापि संतुष्यसि ॥

८

निःस्वो वष्टिशतं शती दशशतं लक्षं सहस्राधिपो ।
लक्षेशः क्षितिराजतां क्षितिपतिश्चक्रेशतां वाञ्छति ॥
चक्रेशः सुरराजतां सुरपतिर्ब्रह्मास्पदं वाञ्छति ।
ब्रह्मा विष्णुपदं हरिः शिवपदं तृष्णाऽवधिं को गतः ॥

६

बद्धो हि को ? यो विषयानुरागी,
को वा विमुक्तो ? विषये विरक्तः ।

१४

बलिभिर्मुखमाक्रान्त, पलितैरङ्कित शिर ।
गात्राणि शिथिलायन्ते, तृष्णैका तरुणायते ॥

१५

च्युता दन्ता सिता केशा, दृङ्निरोध. पदे पदे ।
पातसज्जमिम देह, तृष्णा साध्वी न मुञ्चति ॥

१६

न जातु काम कामानामुपभोगेन शाम्यति ।
हविषा कृष्णवर्त्मेव भूय एवाभिवर्द्धते ॥

१७

धनेषु जीवितव्येषु स्त्रीषु भोजनवृत्तिषु ।
अतृप्ता मानवा सर्वे याता यास्यन्ति यान्ति च ॥

१८

यावती यावती जन्तोरिच्छोदेति यथा यथा ।
तावती तावती दु खवीजमुष्टि प्ररोहति ॥

१९

हते भीष्मे हते द्रोणे, कर्णे च त्रिदिव गते ।
आशा बलवती राजन् !, शल्यो जेष्यति पाण्डवान् ॥

२५

आशादासस्तु-यो जातो, दासस्त्रिभुवनस्य स·।
आशा दासीकृता येन, तस्य दास्ये जगत्त्रयी॥

२६

को वा वित्त समादाय, परलोक गतः पुमान्।
येन तृष्णाग्निसतप्त, कर्म बध्नाति दारुणम्॥

२७

भुक्त्वाऽप्यनतशो भोगान्, देवलोके यथेप्सितान्।
यो हि तृप्ति न सप्राप्त, स किं प्राप्स्यति साम्प्रतम्?॥

२८

तृष्णाऽन्धा नैव पश्यन्ति, हित वा यदि वाऽहितम्।
सतोषाञ्जनमासाद्य, पश्यन्ति सुधियो जना.॥

२९

आशैव मदिराऽक्षाणामाशैव विषमञ्जरी।
आशामूलानि दु खानि, प्रभवन्तीह देहिनाम्॥

३०

आशामपि न सर्पन्तीं य स्तयां रक्षितु क्षमः।
तस्यापवर्गसिद्ध्यर्थं वृथा मन्ये परिश्रमम्॥

३

अकिञ्चनोऽप्यसौ जन्तु, साम्राज्यसुखमश्नुते ।
आधिव्याधिविनिर्मुक्त, सन्तुष्टं यस्य मानसम् ॥

४

अन्तो नास्ति पिपासाया, सतोप परम सुखम् ।
तस्मात्सन्तोपमेवेह, पर पश्यन्ति पण्डिता ॥

५

न योजनशत दूर, बाध्यमानस्य तृष्णया ।
सन्तुष्टस्य करप्राप्तेऽप्यर्थे भवति नादर ॥

६

वृत्यर्थं नाति चेष्टेत, सा हि धात्रैव निर्मिता ।
गर्भादुत्पतिते जन्तौ, मातु प्रस्त्रवत स्तनौ ॥

७

सतोष परमास्थाय, सुखार्थी सयतो भवेत् ।
सन्तोपमूल हि सुख, दु खमूल विपर्यय ॥

८

सन्तोपैश्वर्यसुखिना, दूरे दुर्गतिभूमय ।
भोगाशापाशबद्धानामवमाना पदे पदे ॥

१३

तृण ब्रह्मविद स्वर्गस्तृण शूरस्य जीवनम्।
जितान्तस्य तृण नारी, निस्पृहस्य तृण जगत् ॥

१४

उदारस्य तृण वित्त, शूरस्य मरणं तृणम्।
विरक्तस्य तृण भार्या, निस्पृहस्य तृण जगत् ॥

१५

आशैव राक्षसी पुंसामाशैव विषमञ्जरी।
आशैव जीर्णमदिरा, नैराश्य परम सुखम् ॥

१६

पितृ–पूर्वार्जिता भूमिर्दरिद्रापि सुखावहा।
अपि स्वर्णमयी लङ्का, न मे लक्ष्मण ! रोचते ॥

१७

सौमित्रिर्वदति विभीषणाय लङ्का,
देहि त्व भुवनपते विनैव कोशम्।
एतस्मिन् रघुपतिराह वाक्यमेतत्,
विक्रीते करिणि किमङ्कुशे विवाद ॥

# राग-द्वेष।

१

इच्छा मूर्च्छा काम, स्नेहो गार्ध्यं ममत्वमभिनन्दः।
अभिलाष इत्यनेकानि, रागपर्यायवचनानि॥

२

दृष्टिरागो महामोहो, दृष्टिरागो महाभवः।
दृष्टिरागो महामारो, दृष्टिरागो महाज्वरः॥

३

रागान्धो हि जनः सर्वो न पश्यति हिताहितम्।
रागं तस्मान्न कुर्वीत यदीच्छेदात्मनो हितम्॥

४

स्वस्वकर्मकृतावेशा, स्वस्वकर्मभुजो नरा।
न रागं नापि च द्वेषं, मध्यस्थस्तेषु गच्छति॥

५

रे रे चित्त कथं भ्रात, प्रधावसि पिशाचवत्।
अभिन्न पश्य चात्मानं, रागत्यागात्सुखी भव॥

## जीव स्वरूप ।

१

ज्ञानदर्शनसपन्न आत्मा चैको ध्रुवो मम।
शेषा भावाश्च मे बाह्याः, सर्वे सयोगलक्षणा' ॥

२

अच्छेद्योऽयमभेद्योऽयमविकारी स उच्यते।
नित्य सततग स्थाणुरचलोऽय सनातन. ॥

३

केवल केवलज्ञान, प्राप्नुवन्ति स्ववीर्यत.।
स्ववीर्येणैव गच्छन्ति. जिनेन्द्रा परम पदम् ॥

४

समस्तलोकाकाशेऽपि, नानारूपै स्वकर्मत ।
बालाग्रमिव तन्नास्ति, यन्न स्पृष्ट शरीरिभि' ॥

५

नैन छिन्दन्ति शस्त्राणि, नैन दहति पावक ।
न चैन क्लेदयन्त्यापो, न शोषयति मारुत' ॥

१२

नरकेषु देवयोनिषु तिर्यग्योनिषु च मनुजयोनिषु च।
पर्यटति घटीयन्त्रवदात्मा बिभ्रन्शरीराणि ॥

१३

बिभ्रवश्च शरीरं च, बहिरात्मा निगद्यते।
तदधिष्ठायको जीवस्त्वन्तरात्मा सकर्मकः॥

१४

यो न साधयते धर्मं, कामक्रोधौ तदाश्रयौ।
महामोहविमूढेन, तेनात्मा वंचितो ध्रुवम् ॥

१५

स्वहितं तु भवेज्ज्ञानं, चारित्रं दर्शनं तथा।
तपः संरक्षणं चैव, सर्वविद्भिस्तदुच्यते ॥

१६

तैलक्षये यथा दीपो, निर्वाणमधिगच्छति।
कर्मक्षयात् तथा जन्तुः, शरीरान्नाशमृच्छति ॥

१७

संसारी कर्मसंबन्धात्नटवत् परिभ्राम्यति।
अनन्तकालपर्यन्तं, जीवः संसारवर्त्मनि ॥

२३

नलिन्या च यथा नीर भिन्न तिष्ठति सर्वदा।
अयमात्मा स्वभावेन देहे तिष्ठति सर्वदा॥

२४

अनन्तब्रह्मणो रूप निजदेहे व्यवस्थित।
ज्ञानहीना न पश्यन्ति जात्यन्धा इव भास्कर॥

२५

लोकमात्रप्रमाणो हि निश्चये न हि संशय।
तनूमात्र व्यवहारो कथयन्ति मुनीश्वरा॥

२६

द्रव्यकर्मविनिर्मुक्त भावकर्मविवर्जित।
नोकर्मरहित विद्धि निश्चयेन चिदात्मन.॥

---

## पुण्य।

१

अग्निस्तम्भो जलस्तम्भ, शस्त्रस्तम्भस्तथैव च।
दुष्टानां दमन चैव, पुण्यकारस्य दर्शनात्॥

८

जैनो धर्मः प्रकटविभवः सङ्गतिः साधुलोके ।
विद्वद्गोष्ठिर्वचनपटुता, कौशलं सत्क्रियासु ॥
साध्वी लक्ष्मीश्चरणकमलोपासनं सद्गुरूणां ।
शुद्धं शीलं सुमतिरमला प्राप्यते नाल्पपुण्यैः ॥

९

पत्नी प्रेमवती सुतः सविनयो भ्राता गुणालङ्कृतः ।
स्निग्धो बन्धुजनः सखाऽतिचतुरो नित्यं प्रसन्नः प्रभुः ॥
निर्लोभोऽनुचरः स्वबन्धुसुमुनिप्रायोपयोग्यं धनं ।
पुण्यानामुदयेन सन्ततमिदं कस्यापि सम्पद्यते ॥

१०

तावच्चन्द्रबलं ततो ग्रहबलं ताराबलं भूबलं ।
तावत्सिध्यति वाञ्छितार्थमखिलं तावज्जनः सज्जनः ॥
विद्यामण्डलमन्त्रतन्त्रमहिमा तावत्कृतं पौरुषम् ।
यावत्पुण्यमिदं नृणां विजयते पुण्यक्षये क्षीयते ॥



६

हिंसाऽनृताद्य पञ्च, तत्त्व श्रद्धानमेव च।
क्रोधादयश्च चत्वार इति पापस्य हेतव.॥

७

श्रीब्रह्मदत्तो नरचक्रवर्ती,
मृत्वा गत सोऽपि हि सप्तमीं च।
निर्गत्य तस्माद्भवपङ्कमग्न,
तत्रापि हेतु किल पातकस्य॥

८

बन्धुर्वैरिजनायते गुणवती कान्ता च सर्पायते।
मित्र चापि खलायते गुणनिधि पुत्रोऽप्यमित्रायते॥
श्रीखण्डं दहनायते श्रवणयो सूक्त तु शूलायते।
जाते पुण्यविपर्यये तनुभृतामर्थोऽप्यनर्थायते॥

९

जीवित यस्य धर्मार्थं, धर्मो ज्ञानार्थमेव च।
ज्ञान च ध्यानयोगार्थं, सर्वपापै. स मुच्यते॥



## मनः ।

१

चक्षुःपूतं न्यसेत्पादं, वस्त्रपूतं जलं पिबेत्।
सत्यपूतां वदेद्वाणीं, मनःपूतं समाचरेत् ॥

२

मनो मधुकरो मेघो, मानिनी मदनो मरुत्।
मा मदो मर्कटो मत्स्यो, मकारा दश चञ्चलाः ॥

३

मनसैव कृतं पापं, न शरीरकृतम् कृतम्।
येनैवालिङ्गिता कान्ता, तेनैवालिङ्गिता सुता ॥

४

मन एव मनुष्याणां, कारणं बंधमोक्षयोः।
सप्तम्यां प्रयाके यान्ति, जीवास्तण्डुलमत्स्यवत् ॥

५

वशं मनो यस्य समाहितं स्यात्,
किं तस्य कार्यं नियमैर्यमैश्च।
हतं मनो यस्य च दुर्विकल्पैः,
किं तस्य कार्यं नियमैर्यमैश्च ॥

१०

मन एव मनुष्याणां, कारणं बधमोक्षयोः।
बधाय विषयासक्तं, मुक्त्यै निर्विषयं स्मृतम्॥

११

मनोयोगो बलीयांश्च, भाषितो भगवन्मते।
यः सप्तमीं क्षणार्धेन, नयेद्वा मोक्षमेव च॥

१२

वपु कुब्जीभूतं गतिरपि तथा यष्टिशरणा।
विशीर्णा दन्ताली श्रवणविकलं श्रोत्रयुगलम्॥

१३

शिरः शुक्लं चक्षुस्तिमिरपटलैरावृतमहो।
मनो मे निर्लज्ज तदपि विषयेभ्यः स्पृहयति॥

१४

रात्रिर्गमिष्यति भविष्यति सुप्रभातं।
भास्वानुदेष्यति हसिष्यति पंकजश्रीः॥
एवं विचिन्तयति कोशगते द्विरेफे।
हा हन्त हन्त नलिनीं गज उज्जहार॥

२०

मनःकपिरयं विश्वपरिभ्रमणलम्पटः ।
नियन्त्रणीयो यत्नेन, मुक्तिमिच्छुभिरात्मनः ॥

२१

चञ्चलं हि मनः कृष्ण !, प्रमाथि बलवद् दृढम् ।
तस्याहं निग्रहं मन्ये, वायोरिव सुदुष्करम् ॥

२२

असंशयं महाबाहो !, मनो दुर्निग्रहं चलम् ।
अभ्यासेन तु कौन्तेय !, वैराग्येण च गृह्यते ॥

२३

मानसं प्राणिनामेव, सर्वकर्मैककारणम् ।
मनोरूपं हि वाक्यं च, वाक्येन प्रस्फुटं मनः ॥

२४

अन्तश्चित्तं न चेच्छुद्धं, वहिः शौचे न शौचभाक् ।
सुपक्कमपि निम्बस्य, फलं बीजे कटु स्फुटम् ॥

२५

दानं पूजा तपश्चैव, तीर्थसेवा श्रुतं तथा ।
सर्वमेव वृथा तस्य, यस्य शुद्धं न मानसम् ॥

३०

अन्तर्गतं महाशल्य-मस्थैर्यं यदि नोद्धृतम् ।
क्रियौषधस्य को दोषस्तदा गुणमयच्छतः ॥

३१

प्रसन्नचन्द्रराजर्षेर्मनःप्रसरसंवरौ ।
नरकस्य शिवस्यापि, हेतुभूतौ क्षणादपि ॥

३२

मनो हि द्विविध प्रोक्तं, शुद्धं चाशुद्धमेव च ।
अशुद्ध कामसंकल्प, शुद्ध कामविवर्जितम् ॥

३३

यदि वहसि त्रिदण्डं नग्नमुण्ड जटा वा ।
यदि वससि गुहायां पर्वताग्रे शिलायाम् ॥
यदि पठसि पुराण वेद सिद्धान्ततत्त्वं ।
यदि हृदयमशुद्ध सर्वमेतन्न किञ्चित् ॥

३४

विद्या हि का ? ब्रह्मगतिप्रदा या,
बोधो हि को ? यस्तु विमुक्तिहेतु. ।